अथ विलङ्घ्यप्रकरणम् २

प्रणम्य भार्गवीं देवीम् सर्वलोकैकमातरम्
नारायणः प्रवक्ष्यामि विलङ्घ्यानि पदान्यहम् १
एकारैकारवर्णौ यौ संहितायां विकारिणौ
तदन्तानि विलङ्घ्यानीत्युच्यन्ते वेदवित्तमैः २
पुरातनेऽतिरिक्तम् यत्त्यक्त्वाऽनुक्तम् समोप्य च
वर्णक्रमेण गृह्यन्ते सव्याख्यान्येव तान्यपि ३
इङ्ग्यम् यत्पदमत्रापि नानापदवदिष्यते
निमित्तत्वेन यद्बाह्यं गृह्यते पदमेव तत् ४
अपिचेत्स्याद्धि नान्यत्तु पूरणेऽत्र विधीयते ५
अग्रेऽवारे यदर्येऽह्वेऽतिथयेऽनिष्टकेऽजरे
अन एवाद्यते साह्न ईरतामवरेऽश्नुते १
अनूच्यतेऽन्तरिक्षेंऽसेऽमृतेऽवदयतेऽदिते
अग्नेऽनिङ्ग्यान्तं अन्येऽर्केऽप्यग्नये त्रैंशके न तु २
अस्मै चाष्ट्या अनार्त्यै चाक्षित्या अश्ञवतै तथा
अवरूढ्या अहिंसाया अस्यै तम् पूर्वमिष्यते ३
अमुष्मै चाप्यरिष्ट्यै स्यादास्ते चाह्वयते तथा
अथानयत इन्द्रायोदेवतत्परमात्मने ४
आज्ये चानश आवर्तेऽप्यावर्तन्ते तथाऽऽसते
आगते चाहुवध्यै स्यादावृत्त्या आरभामहै ५

आप्त्या आसामहै चस्यादिच्छते चेच्छ इध्यते
समिद्धेऽग्नीध इज्यन्ते इन्धे मृद्वमिडे भवेत् ६
इरिणे चेन्धते चेध्र इमे नेति परम् भवेत्
त्रिष्टुगिन्द्रिय इज्यान्ता ईमहे चेशते तथा ७
ईक्षन्ते चेक्षतेऽपि स्यादुक्थ उच्यत उप्यते
उच्यमान उपाके स्यादुच्यान्ता ऊतये तथा ८
ऊहते चर्ध्यते चर्ष एकाम्परमृचे भवेत्
ऋत्या आत्मानमृध्याता ऋध्यै तु न मुखात्परम् ९
एते स्यादेतवै चाथौजस्वते व्योमने तथा
कर्मणे कुरुते कक्षे करणे कतमे भवेत् १०
क्रियन्ते स्वकृते कोशे कालेऽस्याः क्रूर इष्यते
क्रेष्यते क्रयणे काण्डे क्रमते क्रियते तथा ११
कल्पन्ते कुर्वतेऽपि स्यात्कस्मै क्रीणावहै तथा
कृत्यै क्रान्त्यै च क्लृप्त्यै च क्षेमेऽपि क्षीयते तथा १२
खायन्ते स्यादनुख्यात्यै गृह्यन्ते गृह्यते गृहे
बिभर्तुपूर्वं गर्भे स्यात् गृहीते गृणते तथा १३
गर्दभे गेऽपि गृह्यान्ते गुप्त्यै गायत्रियै तथा
गृह्यातै चापि गव्यायै घ्ने तु नैव परं भवेत् १४
चिनुते चर्यतेऽपि स्याच्चर्षणे चीयते तथा
चक्षसे जायते ज्ञाने जनिष्यन्ते च जीवसे १५

यस्मिञ्जाते च जायन्ते जाये त्वाज्योतिषे भवेत्
जायन्तै जीवनस्यायै ज्ञात्यै जायामहै तथा १६
जगत्या एव जायातै जित्यै नेति परं भवेत्
जयामहै च जात्यै च जयातै त्रायते तथा १७
तीर्थे तेजस्वते तस्थे तुर इन्द्राय तेजसे
उत्तमे ते च तिष्ठन्त आह त्रिष्टुभ उत्तरे १८
तिष्ठते चोपपूर्वं स्यात्तस्मै तत्यै तथा भवेत्
तस्या इतोऽपचत्पूर्वं दत्त इन्द्रोदमे ददे १९
देवने च दुहे दध्रे दक्षिणे ददते दृशे
दीक्षते दधते दघ्ने दीक्षन्ते च तथा भवेत् २०
आङ्परं देवतायै च दधाता अपि धर्मणे
धीयन्ते धिष्णियेऽपि स्याद्धीयते धत्त इष्यते २१
धृत्यै नाके च नीयन्ते निष्कासे नुदते नये
नप्त्रे नत्यै पुनीते च पवते पावके तथा २२
प्यायते पवसे पोषे वैपूर्णे पा□सुरे पते
पक्षे पन्नेऽग्नये पूष्णे पारे पूर्वे तु नोत्परम् २३
पदे त्विति परं पत्य उपायुः परमिष्यते
पुष्यसे पतयेऽपीति परं स्यादिति पत्नियै २४
नमः पृथिव्यै प्रत्यै धाब्रह्मणे बाधते तथा
भ्राजस्वते द्विभागे च भूमने भ्रंशते भगे २५

भुञ्जते चायुषो भुङ्क्ते भियै भूत्यै तथा भवेत्
भुनजाध्वै मुखे मध्ये मार्जयन्ते मरुत्वते २६
माध्यन्दिने च क्षत्राय महते मथिते मदे
पूर्णमासे महिम्ने मेऽदिते दायि महे मृते २७
मन्यवे मुञ्चते मंस्ये मिमीतेऽपि मनामहे
मनुते म्रियते मेधे मन्यन्ते मध्यमे मुचे २८
मेष्यै च मत्यै मुक्त्यै स्याद्यजते यजने तथा
योगे तु यज्ञं योगेऽग्निम् पूर्वं स्याच्च यजामहे २९
युत्वते यजमाने स्यादायुरेवाशिषः परम्
एतम् यज्ञस्य पूर्वं चेत् नेष्यतेऽवयजे भवेत् ३०
एकाजग्मेममारण्या एवं विद्वांस इन्दवः
एषां पशव उद्यन्तः एतावन्तः परं च ये ३१
परो नव उशन्तो ये वाजिनं समिधस्सुवः
भक्ष सा तेभ्य एतेषु विनोदेवं परेण तु ३२
यज्ञे चोल्बणमेवोप ह्वयध्वं परमिष्यते
नैभ्यः पूर्वं भवेद्यत्ते यूथे यूपे च युज्यते ३३
युज्यन्ते यतने यक्ष्ये युङ्क्ते युक्त ऋतायते
यस्मै च यत्यै यज्यायै युक्त्यै रमयते रभे ३४
रोचते रिच्यते रुन्धे रिक्त एवपरं भवेत्
रुन्धते रुरुचे राष्ट्रे रोचन्ते रभते तथा ३५

रणे यमाय राज्ञे स्यादपि र□ह्यै रभावहै
अनारण्याःपरं रुध्यै लभ्यन्ते लभते तथा ३६
लोके च नायं गो गोवै पूर्वं लप्स्यामहे व्रते
विदे वयस्वते विश्वे वर्चसे चाङ्परं वरे ३७
विन्दते वर्षवर्णे च वीतये च वृणीमहे
वस्ते वारयते वृङ्क्ते वृणीते वृक्ष आयुधम् ३८
वते स्यादिन्द्रियादित्यानीकपूर्वं च विष्णवे
निवाते वायवे वादे वस्यसे वक्ष्र्यते तथा ३९
वाक्ये वथ्सर आग्नेयमेकामेवपरं भवेत्
नत्वेवास्मै परं चेत्स्यादवपन्ते वज्र एव च ४०
व्याधिनेऽसद्वशे चापि वृणै वृत्त्यै वृणामहै
वृणावहै विशै वै च वृष्ट्या एव परं भवेत् ४१
श्रेयसे शुचये शास्ते श्रीणीषे शस्यते तथा
शोचिषे स्यादनिङ्ग्यान्तं श्रैष्ठ्येपि श्रयते तथा ४२
श्रपयन्ते शये नीचम् शान्त्यै श्रुत्यै च शातयै
शुद्ध्यै षोडशिने स्योने स्तृणुते सृजते समे ४३
इङ्ग्यान्तं स्थे न याज्यासु स्वे च नेति परं सने
सर्वे सन्त्वासते पूर्वं स्पष्टे चेति परं सवे ४४
सङ्गिने च सहस्रे च सातये स्तुभ एव च
सूनवे सवने स्तोमेऽथो पूर्वं स्वस्तये तथा ४५

सृजन्ते च सवित्रे च पवमाने स्तुते भवेत्
सोमे त्वहीने पूर्वं स्यात् स्थित्यै सिञ्चामहै तथा ४६
सस्यायै च सिनीवाल्यै सूत्यै स्तृत्यै भवेदपि
सृष्ट्यै समृद्ध्यै हूयन्ते हूते नेतिपरं हुवे ४७
भवत्याहवनीये च हुते होत्रे हवामहे
हते हस्ते तु नेङ्ग्यान्तं हरन्ते ह्वयते ह्नुते ४८
हीयते हूयते हत्यै हन्तवै च हरामहै
ह्वयामहै हरै हित्यै नैभ्यस्सन्त्यधिकानि तु ४९
इति विलङ्घ्यप्रकरणं समाप्तम् २